*Tel: "Samskrutam"* दूरध्वनि - "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

सम्पुटः १३ | 15th NOVEMBER | क्रमांकः ११

राक्षस कार्तिकाङ्कः

शकाब्दाः १८९७

मूल्यम् ०-५० पैसाः

# विषयसूचिका

★

# भजत भरतदेशम्

स्फूर्तिश्री,
B1/3
पट्टाभिपुरं,
गुण्टूर्-४

भजत भरतदेशं भव्यशोभानिवेशं,
सुगुणनिकरवासं शुभ्रकर्मप्रभासम् ।
सदयहृदयसेवा स्वच्छधर्मानुषंगं,
तिमिरसमरवेळा दीव्यदुद्यत् पतंगम् ॥

नमत भरतदेशं नम्रभोगीश्वरेशं,
सरसमृदुलचित्तं साधुभावैकवित्तम् ।
सुकविसकलकाव्य स्तोमविख्यातगीतं,
बलवदमल नेतृ प्राज्यमार्गप्रणीतम् ॥

स्मरत भरतदेशं सार्वभौमप्रदेशं,
विनुत चिरचरित्रं विश्वशश्वत् पवित्रम् ।
तुहिनगिरिकिरीटं दुर्दमान्तः कृपीटं,
जलधिललितचेल सच्चिदानन्दखेलम् ॥

# विद्याफलं कीदृशम्

विद धातोः ज्ञानार्थकत्वात्, या ज्ञानं वर्धयति सैव विद्येति फलितार्थः। जन्त्वन्तरापेक्षया भगवता प्रसादितं ज्ञानं विकासयितुं, अभिवृद्धिं प्रापयितुं प्रधानभूतहेतुर्विद्यैव। अत एव विद्यागन्धहीनः मनुजः पशुसमान इति कथ्यते। "विद्याविहीनः पशुः" इति हि भर्तृहरे रुक्तिः। अधुनातनकाले विद्याव्याप्तिः परं पूर्वस्मादपि काला दधिकतरैवेति वचने न कोऽपि संशयः। किन्तु विद्याफलभूतं ज्ञानादिकन्तु पूर्वकालापेक्षया अतीव रिक्तमिवाऽऽभाति। पुरा काले परीक्षानियमावलिः – परीक्षासरणिः – परीक्षाधिकारिणां पर्यवेक्षणं इत्यादिकं नैवासीत्।

इदानीन्तु विद्याभ्यासः उद्योगसम्पादनार्थैवेति युवभिः निश्चितः। कस्मात् विद्या अभ्यस्य ... उद्योग सम्पादनाय अथवा धनसम्पादनाय अथवा धनसम्पादनपरिज्ञानोपार्जनाय इत्येव सिद्धान्तितमस्ति सांप्रतम्। न तु ज्ञानोपार्जनाय - तद्वारा मोक्षसाधनाय। अत एव उद्योगलिप्सया, यथाकथञ्चित् यस्यां कस्यांचित् परीक्षायां उत्तीर्णतां सम्पाद्य, तत्क्षणात् उद्योगप्राप्तये प्रभुतायाः महान्तं क्लेशं जनयति जनः। नैकविधासु परीक्षासु उत्तीर्णानां सकलानां उद्योगप्रदानं कर्तुं कथं वा प्रभवति प्रभुता? "उद्धरेदात्मनाऽऽत्मानं" इति भगवतो वचनतः स्वस्य जीविकोपायः स्वेनैव गवेषणीयः। तत्र परापेक्षा नाभिलषणीया। स्वयं परीक्षोत्तीर्णः वाणिज्यं - व्यापारं - कृषिकर्म यं कमपि गृहपरिश्रमं कर्तुं संसिद्धो

भवेत् । एतादृशेषु कार्येषु यस्मै कस्मै अपि यथोचितं धन-साह्यं कर्तुं सर्वकारः सर्वदा संसिद्ध एव वर्तते खलु । सत्सु जीवनोपायेषु बहुषु, सर्वान् परित्यज्य केवल मुद्योगमेव अभिलषमाणा युवानः न सम्य-क्कारिण इति भाति । "उद्यो-गिनं पुरुषसिंह मुपैति लक्ष्मीः" इति हि आर्याणामुक्तिः । अतः संपत्संपादनाय उद्योग एव आश्रयणीय इति न वक्तव्यम् । अत्र तु उद्योग इति पदस्य प्रयत्न इत्यर्थः । उद्योगीत्यस्य तु प्रयत्नपर इत्यर्थः । अतः धनसम्पादनाय उत जीवनाय स्वयं प्रयत्नः कार्य इति फलितार्थः । अपि च —

"वाणिज्ये वर्धते लक्ष्मीः,
तदर्धं कृषिकर्मणि ।
तदर्धं राजसेवायां,
याचने नैव नैव हि ।।"

अस्मात् कारणात् ज्ञानोपार्जना-यैव विद्याभ्यासः न तु धना-येति निर्णयं मनसि निधाय, युवभि र्यत्नः कार्यः । स्वेच्छया, न्यायमार्गेण स्वजीविकां याप-यितुं,स्वकुटुम्भरणं च कर्तु प्रयत्न-परैर्भाव्यम् ।

# समस्यापूरणम्

## (कविताविनोदाय)

★

अतीतमासिक्यां गैर्वाण्यां प्रदत्तायाः कानने क्रन्दते वधूः समस्यायाः कैश्चित् पूरितानि पद्यानि यथावकाशं अत्र प्रकटितानि। नामसंकेतादि गैर्वाणीप्रकटित चीटिकासहितपद्यान्येव स्वीक्रीयेरन्। प्रारम्भ इति मत्वा चीटिकारहितान्यपि पद्यानि प्रकटितानि, इतःपरं एतन्नियमः सर्वथा परिपाल्यते।

कुत्र स्यात् घातुको जन्तुः? किं कुर्यात् क्षुधितः शिशुः?।
काऽनाधारा न शोभेत? काकने, क्रन्दते, वधूः॥

— **के. सि. जयचन्द्रशास्त्री**, चित्तूरु

गृहकर्मस्वनासक्ता भर्तुर्नित्यार्तिदायिनी।
दुर्गुणाढ्याच संसार "कानने क्रन्दते वधूः"॥

— **बालगणपतिभट्टः**, श्रीरङ्गपत्तनम्।

दावाग्निः वर्तते कुत्र? नरो भीतः करोति किम्?।
किं कथ्यते पुत्रभार्या कानने, क्रन्दते, वधूः॥

**जे. दक्षिणामूर्तिः**, आदोनि।

रजकवचनात्परित्यक्ता रामेण गुर्विणी।
निन्दन्ती भागधेयं स्वं कानने क्रन्दते वधूः॥

— **दिवि श्रीनिवासदीक्षितः**, P. O. L. गुन्टूरु।

दृष्ट्वा शठं च भर्तारं प्रियो मे दुर्लभस्त्विति।
स्वगृहं हि परित्यज्य कानने क्रन्दते वधूः॥

— **पुन्नमराजु वेंकटरमणमूर्तिः**, चित्तूरु।

भूतधात्रीसुता सीता जनकेनाऽपि पालिता ।
कोसलाधिपतेश्चित्रं कानने क्रन्दते वधूः ।।

— **पि. यं. पद्मनाभशर्मा**

नवोढा कामिनी कापि कामवेगेन पीडिता ।
पतिरिक्तनिवासाख्य "कानने क्रन्दते वधूः ।।

— **नरसिंहः**, चिनतिन्ड्रकोलनु

प्रियं कुञ्जविलीनाङ्गं न पश्यन्ती विलासिनम् ।
वियोगार्ता रहः केली कानने क्रन्दते वधूः ।।

— **ना. वा. निगमन्तः, प्रोद्दुटूरु ।**

अधर्माऽऽचरणै श्चौरैर्नाथे धर्मे सुपीडिते ।
नीति स्तस्य कलौ नाम्ना कानने क्रन्दते वधूः ।।

— **दोर्बल गैर्वाणीशर्मा**, कोव्वूरु ।

पाण्डुशैलजसिंहानां बद्धानां धर्मपाशतः ।
धार्तराष्ट्रसभाऽऽख्याने कानने क्रन्दते वधूः ।।

— **दोर्बल प्रभाकरशर्मा**, कोव्वूरु ।

जनकस्य कुले जाता श्रीमद्दशरथस्नुषा ।
वर्तमाना ह्यशोकेऽपि कानने क्रन्दते वधूः ।।

— **डि. पद्मावतीदेवी**, कोव्वूरु ।

# गान्धीकथा

बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

अक्टोबरमासस्य द्वितीयोवासरः । महात्मनः जन्मदिनोत्सवः । तदानीं गान्धीमहोदयः सेवाग्राम एव निज आश्रमे आसीत् ।

प्रायः लोके सर्वेषां गृहेषु जन्मोत्सवः वैभवेनाचरिष्यते । सोयं वर्धिष्णुरुत्सवः गृहे स्थितानां महत्प्रमोदस्थानम् । उत्सवार्हः पुरुषः प्रगे तैलाभ्यञ्जनेन शुद्धो भवति, नूतनानि वस्त्राणि च धारयति मध्याह्ने जन्ममहं निमित्तीकृत्य सुस्वादु भोजनं इष्टैः मित्रैश्च साकम् च प्रचलति । बन्धु बान्धवा अपि तत्र भागं वहन्ति ।

गांधी महाभागस्य सेवाग्रामे तु तादृशो महानुत्सवः न दृष्टः । सर्वाण्यपि कार्याणि यथावत् प्रचलन्ति स्म ।

सायं प्रादोषारम्भे महात्मनः प्रार्थनासमयः । प्रार्थनावेदिकायां गान्धी उपाविशत् । परितः वेदिकां प्रार्थनाकराः आश्रमस्थाः उपस्थिताः जन्मोत्सवं अधिकृत्य तत्रापि न विशेषालङ्कारः दृश्यते स्म । सर्वमपि यथावत् । विशेषतस्तु पतिभक्तया कस्तूरीबाई महाभागया ज्वलितो घृतदीपः एकस्मिन् कोने प्रज्वलति स्म, महात्मानमेव प्रतिबिम्बीकृत्य ।

प्रार्थना समाप्ता । सभाया मुपविष्टाः सर्वेपि गान्धीमुखेन विशेषप्रवचनं श्रोतु मुत्सुका आसन् ।

प्रवचनारम्भे सर्व प्रथम मपृच्छत् "कुतोयं घृतदीप" इति ।

"मयैवायं दीपः प्रज्वलितः, तत्रभवतां जन्मदिनवैशिष्ट्यं निमित्तीकृत्य" इत्यवदत् "बा" ।

"अद्य महान् दोषः एकः प्रचलितः ममाश्रमे इति ज्ञात्वा नितरां दूयते मे चेतः । ज्योतिर्ज्वलनमेव दुष्टं कार्यं भावयामि अहम् ।" इति पीठिकारूपेण कानिचन वाक्यानि कथयित्वा महात्मा भार्यां कस्तूरीबां प्रति अभणत् ।

अये! ममाश्रमेऽद्य घृतवर्तिका ज्वलति । भारतस्यास्य देशस्य बहुषु ग्रामेषु निवसन्तो निर्धनाः तैलस्यापि दीपं एकं द्रष्टुं सर्वथा असमर्थाः । वस्तुतस्तु ग्रामीणाकिञ्चनजनाना मलभ्यवस्तूनां उपयोगे नास्माकं सर्वथाऽधिकारः । जन्मोत्सवे शुभानि पुण्यप्रदानि, श्रेयोनुकूलानि कर्माणि कर्तव्यानि ननु? "त्वया तु महत् पापकर्माधुनाऽनुष्ठितम्" इति ।

पतिदेवस्य वचनानि शृण्वत्याः तस्याः महाभागायाः नयने स्वयमश्रुपूर्णेऽभवताम् ।

## असत्यं हानिकारकम्

— ना. ब. निगमान्तः, प्रोद्दुटूरु ।

नदीतरुमहीधरैः परिवृते हृदाकर्षके,
कुटीशतविभूषिते निवसत स्म कुग्रामके ।
गवां च परिपोषणे प्रतिदिनं तु भानां मुदा,
पुरा जनकतत्सुतौ कृतसमुद्यमौ कौचन ।।

अवापतुरिमौ वनं सपदि गोवृषैरेकदा,
दिवाकरविकासिते दिनमुखे सुमित्रैः सह ।
निरर्थकपदान्वितं किमपि गीतमानन्ददं,
स्वरप्रचयमञ्जुलं समयजं सृजन्तौ मुहुः ॥

समीपतरवर्तिनः सकलगोपबालान्सहि,
प्रतारयितुमुत्सुकः पितरमाश्लिषन्पृष्ठतः ।
अहो बत! समेति कश्चन सुदीर्घदेहोनुमा,
मरोददिति बालको जनक पुण्डरीकः किल ॥

निशम्य सुतरोदनं झटिति वीक्षमाणः पिता,
निवर्त्य गलमात्मनः परिहसन्तमुच्चैः सुतम् ।
विनिन्द्य कटुभाषितैः कमपि तत्र पश्यन्नहि,
क्रुधाऽनृतविभाषिणं मृगमभूत्तु तूष्णीं श्वसन् ॥

क्षणेषु वनसीमनि क्रमगतेषु केषु द्रुतं,
समागतमसौ भयात्समवलोक्य तं द्वीपिनम् ।
हतोहमिति घातुकः समुपयाति शार्दूलको,
रुरोद सतु बालकः करमुदस्य सत्यं पुनः ॥

श्रुतं सहचरास्तदा श्रुतिकठोरमाक्रन्दनं,
मृषेति परिचिन्त्य तज्जनकमुख्यगोपालकाः ।
प्रजग्मु रथ बालकं मृगवरोपि जोषं रुषा,
जघान परिहासजं मरणदं बभूवानृतम् ॥

(सूचना — "नीतिकथामञ्जरी" ग्रन्थात् समुद्धृतेयं कथा)

# उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः

## तपःप्रभावात् राजर्षिः ब्रह्मर्षि रभवत्

बोधकरत्नं, रामायणज्योतिः, उपन्यासचक्रवर्ती
ज्यौतिषविद्वान् – मु. वि. श्रीनिवासराघवाचार्यः, अवलूर्

### ( विश्वामित्रकथा )

[ पूर्वानुबन्धः ]

इत्थं ब्रुवन्तं राजानं उदारधीः वसिष्ठः सनिर्बन्धं पुनःपुनः न्यमत्रयत। तस्मात् गाथेयः कौशिकः विश्वामित्रः बाढं इत्युक्त्वा तदङ्गीचकार। अथ महातेजाः वसिष्ठः स्वधेनुं सर्वकामफलप्रदां आहूय "हे शबले, सबलस्य अस्य राजर्षेः आतिथ्यं कर्तुं व्यवसितोस्मि। तस्मात् यस्य यस्य यथाकामं षड्रसे ष्वभिपूजितं भोजनेन महार्हेण सत्कारं संविधत्स्व। मम कृते तत्सर्वं क्षिप्रं अभिवर्ष। रसान्नेन पानेन लेह्यचोष्येण संयुतं अन्नानां निचयं सृजस्व। त्वर त्वर" इति इत्थं वसिष्ठे नोक्तवती कामधुक् शबला यस्य यस्य यथेप्सितं विदधे। वरासनान्, इक्षून् मधूनि लाजान्, महार्हाणि पानानि भक्ष्याणि मृष्टान्नानि सूपानि नानास्वादुरसानां सुपूर्णानि गौडानि भाजनानि च सहस्रशः विदधे। इत्थं हृष्टपुष्टजनायुतं वसिष्ठेन अभितर्पितं विश्वामित्रबलं सर्वं सुसन्तुष्ट मासीत्। सान्तःपुरवरः सब्राह्मणपुरोहितः राजा विश्वामित्रोपि तदा हृष्टःपुष्ट श्चाभवत्। आश्रमवासिनः वसिष्ठस्य इमां शबलां विना सामान्यभृत्यबलपरिवारितस्य मम आतिथ्यं कथं शक्यं इति मनसि विचार्य वसिष्ठं महातेजसं परोपकारिणं सर्वभूतदयापरं इत्थं आह — कामधुक् शबला तव आश्रमे माभूत्। मन्निकटे च वर्तितव्या। त्वदीया शबला गवां शतसहस्रेण मह्यं विक्रे-

तव्या। दीयतां शबला मम। धेनुरत्न मेतत् राजार्हं मेव न तु ऋषेरर्हम्। पार्थिवः रत्नहारी च। शबलैषा धर्मतः मम। तस्मात् शबलां मे देहि इति।

तच्छ्रुत्वा महामतिः मुनिसत्तमः भगवान् वसिष्ठः असूयया-पहतचेतसं महीपतिं प्रत्युवाच। "राजन् गवां शतसहस्रेण कोटिशतैर्वा रजतस्य सुवर्णस्य राशिभिर्वा नाऽहं दास्यामि। इयं सर्वथा मत्सकाशात् परित्यागं नार्हति। आत्मवतः शाश्वती कीर्ति रिव मह्यं विद्यमाना वर्तते। अस्याः हव्यं कव्यं च प्राणयात्रा मम। आयत्तं अग्निहोत्रं बलिः होमः स्वाहाकार-वषट्कारा विविधाः विद्याः सर्वं सर्वस्वं न संशयः। सत्येन सदा मम तुष्टिकरी। कारणैः बहुभिः राजन् न दास्ये शबला इमाम्।

तदाकर्ण्य राजा कौशिकः-ब्रह्मन् कुंजराणां चतुर्दशसहस्राणि, हैरण्यकक्ष्याग्रैवेयान् सुवर्णांकुशभूषितान् श्वेताश्वानां चतुर्भुजां हैरण्यानां रथानां अष्टौ शतानि, कुलजानां देशजातानां महौजसां नानारत्नविभूषितानां हयानां नानावर्णविभक्तानां वयस्थानां दश सहस्रमेकं गवां कोटिं च ददामि। किञ्च द्विजोत्तम, रत्नं वा हिरण्यं वा यावानिच्छसि, तत्सर्वं तावत् दास्यामि। दीयतां शबला मम। तदाकर्ण्य वसिठः प्रत्यब्रवीत् — "राजन् एतदेव हि सर्वस्वं इद मेवहि जीवितं, दर्शश्च पूर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः, तदेव हि मे रत्नं विविधाश्च क्रियाः तथा, मम सर्वाः क्रियाः न संशयः। बहुना किं प्रलापेन, न दास्ये कामदोहिनीम्" इति।

यदा कामधेनुं वसिष्ठः न त्यजति तदा विश्वामित्रः शबलां अन्वतर्षत्। राज्ञा नीयमाना शबला अतिदुःखिता अनिलवेगेन

वसिष्ठस्य पादमूलं आगत्य रुदन्ती क्रोशन्ती वसिष्ठस्य अग्रतः स्थित्वा मेघदुन्दुभिराविणी "भगवन् ब्रह्मणस्सुत, त्वयाहं परित्यक्ता किम्? किमिति त्वत्सकाशात् राजभटाः मां नयन्ति? इत्याह। शबलादुस्संकटं ज्ञात्वा तस्याः रोदनध्वनिं च श्रुत्वा तां आश्वासयन् आह "हे शबले! स्वसार मिव स्थितां त्वां न त्यजामि। त्वया मे नापकृतम्। राजा महाबलः पृथिव्याः पतिः इति कारणेन त्वां नयति" इति। तदाकर्ण्य शबला "क्षत्रियस्य बलं न बलम्। ब्राह्मणो बलवत्तरः। नियुङ्क्ष्व मां महाभाग! त्वद्ब्रह्मबलसंभृतां तस्य दर्पबलं यत् तन्नाशयामि" इति अवदत्।

वसिष्ठः शबलां एवं आदिशत्, परबलारुजं सृजस्व इति। तस्य तद्वचनं श्रुत्वा सा सुरभिः परबलारुजं असृजत्। ततः स्वबलं भग्नं दृष्ट्वा विश्वामित्रः परमक्रुद्धः अस्त्रबलैः शबलाबलं नाशयामास। पुनरपि विशेषसैनिकान् शबला असृजत्। तेन सैन्येन विश्वामित्रबलं सर्वं नष्टमासीत्। ततः एकाकी स्वपुरं जगाम। तत्र पुत्र मेकं पालनाय नियुज्य पुनः वसिष्ठनिग्रहार्थं विशेषप्रतापाप्तये महादेवप्रसादार्थं तपः कर्तुं हिमवत्पार्श्वं जगाम।

तत्र विश्वामित्रः भवानीवल्लभं ध्यायन् सुदारुणं तप स्तेपे। केनचि त्वथ कालेन वृषभध्वजः ईश्वरः कौशिकं इत्थमाह। "राजन् किमर्थं तप्यसे? वरदोऽस्मि। ब्रूहि ते कांक्षितम्। एव मुक्तः देवेन सः राजा विश्वामित्रः यदि तुष्टो भवान्, तर्हि यानि देवेषु दानवेषु गन्धर्वयक्षरक्षःसु अस्त्राणि तानि सर्वाणि अस्त्राणि मम दिशतु।" इति प्रार्थयामास शंकरम्। पशुपति रपि तथा भवतु इत्युक्त्वा अन्तर्दधे। प्राप्य चास्त्राणि सर्वाणि दर्पपूर्णोऽभवत्। पर्वणि विवर्धमानसमुद्र इव वसिष्ठं जितमेवेति मन्वानः जवेन

वसिष्ठाश्रमं आजगाम। ततः आश्रमपदं गत्वा पार्थिवो विश्वामित्रः अस्त्राणि मुमोच। तस्याऽस्त्रतेजसा तपोवनं सर्वं निर्धग्धं आसीत्। पार्श्वस्थाः, ऋषयस्सर्वे भीतभीताः इतस्ततः परिभ्रमन्तः बहुदूरं पलाययामासुः। तेन कुपितः वसिष्ठः, भास्करः नीहारमिव अद्यैव गाधेयं नाशयामी" त्युक्त्वा यमदण्डमिवाऽपरं स्वदण्डं पुरतः स्थापयित्वा ततः पश्चात् स्वयं उपविष्टः स्वपृष्ठतः शबलां च स्थापयित्वा मन्त्रान् जपन्नास्त। ततः विश्वामित्रः वसिष्ठं प्रति आग्नेयं अस्त्रं उत्क्षिप्तवान्। तत्तु कालदण्डेन ग्रसितं आसीत्। वसिष्ठः विश्वामित्रं आह—"चिरसंवृद्धं मम आश्रमं नाशितवानसि, तस्मात् त्वं दुराचारोसि। न भविष्यसि अचिरेण नाशंप्राप्स्यसि क्षत्रियाधम, इदानीं तव बलं दर्शय। गाधिज, तव सर्वं बलं नाशयामि। ते क्षत्रियबलं क्व? महत् मम ब्रह्मबलं क्व? रे क्षत्रियपांसन, पश्य ब्रह्मबलं दिव्यम्" इति। ब्रह्मदण्डः तस्य गाधिपुत्रस्य सुघोरं आग्नेयं अस्त्रं अम्भसा अग्निमिव तदस्त्रं शान्तं कृतवान्। अथ अत्यन्तं कुपितो राजा कौशिकः वारुणं, रौद्रं, ऐन्द्रं, पाशुपतं, मानवं, मोहनं, गान्धर्वं, वज्रपाशं, नागपाशं, ब्रह्मपाशं, पैशाचं, क्रौंचं, धर्मचक्रं, कालचक्रं, वायव्यं, विष्णुचक्रं, मथनं, हयशिरः, शक्तिद्वयं, कालं, मुसलं, वैद्याधरं, कालास्त्रं, त्रिशूलं, कङ्कणं, कापालं इति तानि सर्वाणि अस्त्राणि उपर्युपरि चिक्षेप। तानि सर्वाणि अस्त्राणि ब्रह्मदण्डेन ग्रसितानि वितथीकृतनि च। तेषु सर्वेषु अस्त्रेषु शान्तेषु सत्सु, गाधिनन्दनः अन्ततः ब्रह्मास्त्रं क्षिप्तवान्। उद्यतं तदस्त्रं दृष्ट्वा देवर्षयः संभ्रान्ताः सर्वेपि भीताः आसन्। ब्रह्मास्त्रे समुदीरिते त्रैलोक्यं संत्रस्तं आसीत्। महाघोरं तदस्त्र मपि तेजसा ब्राह्मेण ब्रह्मदण्डेन वसिष्ठः ग्रसते।

[ अनुवर्तते ]

# बालबोधः – ४

— के. सि. जयचन्द्रशास्त्री

हे बालाः ! अस्माकं भारतदेशस्य पुण्यभूमि रिति नामान्तरं वर्तत इति युष्माभिः सर्वदा स्मर्तव्यम्। व्यासवसिष्ठवाल्मीक्यादयः महर्षयः अत्र भारते एव समुत्पन्नाः। तेऽस्माकं ज्ञानदायकान्, संस्कृतिनिधानान् ऐहिकामुष्मिकसुखप्रदान् ग्रन्थान् विरच्य देशस्य, प्रजानां च महोपकार मकार्षुः। एतादृशेषु महर्षिषु व्यासमहर्षिः भगवदंशतया समभवदिति प्रसिद्धिः। स तु महर्षिः कलौ युगे, जनाः अल्पमेधसः अल्पायुषश्च भवेयु रिति विज्ञाय, तेषां सुग्राह्यत्वाय वेदराशिं चतुर्धा ऋग्यजुस्सामाथर्वरूपेण विभागं चक्रे। "अनन्ता वै वेदाः" इति प्राचा मुक्तिः किल! वेदविभागकरणादेवाऽस्य वेदव्यास इति लोके प्रथा समजनि। न केवलं वेदविभागं, अपि तु अष्टादशपुराणानि, उपपुराणानि च व्यरचय दयं व्यासमहर्षिः, यानीदानी मपि अस्माकं प्राचीनसंस्कृतिबोधकानि, ज्ञानविज्ञानप्रदानि च, राराजन्ते। व्यासवाल्मीकिविरचितानि भारतरामायणादीनि न केवलं भारतीयैः, वैदेशिकै रपि भाषान्तरीकरणद्वारा, तत्साहित्यं, सारस्यञ्चावबुध्य समाद्रियन्ते।

वाल्मीकिमहर्षेः प्राथमिकस्थिति मधिकृत्य काश्चन वार्ताः लोके प्रवर्तन्ते। तासां कथानां याथार्थ्यं निर्णेतुं अस्माभि र्न शक्यते। किन्तु ऋषित्वमापन्नः सः श्रीमद्रामायणविरचनेन महान्तं लोकोपकार मकरोदिति आस्तिकै स्सर्वैरप्यनुमोद्यते। यत्पठनेन उत्तमपुरुषस्य सांघिकप्रवर्तनाप्रकारः सुष्ठु परिज्ञायते।

संस्कृते इदमेव प्रथमं काव्यमिति, अयमेव प्रथमः कवि रित्यपि लोकप्रसिद्धिः। अत एव रामायणस्य "आदिकाव्य" मिति वाल्मीकेः "आदिकवि" रिति च प्रसिद्धि रुदभूत्। रामायणस्य शैली ललितपदगुम्फिता, रमणीया, मधुरतरा च भवति। संस्कृतानभिज्ञोऽपि रामायणस्य पुनः पुनः पठनेन उत्तरोत्तरं अर्थविशेषानपि वेत्तुं शक्नोतीत्ययमभिप्रायः अनुभवसिद्धः। संस्कृताभ्यासकाः रघुवंशादिपञ्चकाव्यानि क्रमशः पठन्ति खलु इदानीन्तनकाले। रघुवंशादीना मेतेषां पञ्चमहाकाव्याना मुत्पत्तेः पूर्वं संस्कृताभ्यासाय किं वा काव्यं पठनीय मासीदिति विचारे कृते, आदिकाव्यं रामायणमेवेति संस्कृतज्ञानां वृद्धाना मुत्तरम्। समग्रकाव्यलक्षणसंपन्नस्य कृत्स्नस्य रामायणस्य एकैकस्य पठनेन संस्कृतपरिज्ञान मनन्यादृशं भवती त्यस्माक माशयः। असाधारणतपसां महर्षिणां वचसा मसाधरणी शक्ति र्विद्यते। "एकक्रिया द्व्यर्थकरी बभूव" इति वचनानुसारतः ते महर्षयः "पठितॄणां, श्रोतॄणां च ऐहिक मामुष्मिकञ्च फलं भूया" दिति परमया प्रियतया ग्रन्थान् ग्रथितवन्तः। काम्यफलाप्तये, जनाः विश्वासयुक्ताः रामायणपारायणं, तदन्तर्गतसुन्दरकाण्डपारायणं वा कृत्वा तत्तदभीष्टफल मवाप्य ऐहिके सुखिता भवन्ति। आमुष्मिकं मोक्षसुख मप्यधिगन्तुं प्रभवन्ति। वर्षाभावप्रयुक्तक्षामेण पीडिते सति देशे, भारतान्तर्गतविराटपर्वणः पठनेन, पुराणश्रवणेन वा क्षामबाधानिवृत्ति र्भवतीति लोकप्रसिद्धि रिदानीमपि काले वर्तत एव। अकारादिहकारान्तानां वर्णानां प्रत्येकं काचन शक्तिर्विद्यत एव। तत्कथं ज्ञातुं शक्यत इति चेत् – उच्यते, यः कश्चिद् वृश्चिकदष्टः सर्पदष्टो वा तद्बाधानिवारकमन्त्रवेत्तु स्सकाशमायाति। मन्त्रज्ञः उपांशु यत्किमपि वर्णसमाम्नायं वदति। दष्टस्य तद्बाधा

निवृत्तिः झडिति जायते। एतदनुभवसिद्धमेव। अतो वर्णानां काचन अदृष्टा शक्ति रस्तीत्यङ्गीकार्या। अस्मा त्कारणात्, अक्षरशक्तिज्ञानवद्भि महर्षिभिः कृतानि काव्यानि, पुराणानि च तत्तत्फलं प्रददतीति अवश्य मभ्युपगन्तव्यमेव भवति।

अपि च हे बालाः — विशजी महाशयः मातुस्सकाशात्, पौनः पुन्येन भारतकथाश्रवणात् तादृशदेशाभिमानी, महावीरश्च संवृत्त इति, हरिश्चन्द्रनाटकदर्शनेन, गीतायाः पठनेन च गान्धी-महाशयः, सत्यावादी - देशभक्तः - आर्तानां कष्टापनोदकः चासी-दिति, युष्माकं पाठ्यग्रन्थेषु तत्र तत्र पठ्यते खलु।

एतादृशैः हेतुभिः कीदृशाः ग्रन्थाः पठनीया इति चेत्, भारतभागवतरामायणादीनि आर्षाण्येव, येन नीतिः, प्रवर्तना, आजीविका च पवित्रिता भूत्वा सत्पौराः भवेयुः; कालेनामुष्मिक-सुखञ्च विन्देरन्। नो इतराणि, प्रेमकलापप्रचुराणि, शील-प्रवर्तनाभ्रंशकानि नवलारूपाणि।

---

**उदारप्रशंसा —**

शतेषु जायते शूरः सहस्रेषु च पण्डितः।
वक्ता दशसहस्रेषु दाता भवति वा न वा॥

अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति॥

रक्षन्ति कृपणाः पाणौ द्रव्यं क्रव्यमिवात्मनः।
तदेव सन्तः सततं मुत्सृजन्ति यथा मलम्॥

# शुचीन्द्रस्थलमाहात्म्यम्

लेखकः — श्री पि. परमेश्वरशर्मा

चतुर्मुखस्याऽध्वर मन्त्रिरादरात्,
समुद्वहन् हस्तधृतस्रुवो मुनिः ।
यथाक्रमं यज्ञभुजोऽखिलामरा-
नतर्पय द्रव्यविभागदानतः ॥ १

उषर्बुधोऽध्वर्युसुमन्त्र वैभव
प्रसेदिवान् यज्ञसदऽस्यजस्य वै ।
स्वयं प्रजज्वाल विलोक्य तं मुनेः,
प्रभाव मिंद्रादिजनो विसिष्मिये ॥ २

विरिंचि माहूय विधुंतुदाहित –
स्समेत्य शर्वेण मुने र्महात्मनः ।
शशंस सर्वं महिमान मादरा –
त्तदाऽब्रवी न्नारद एत्य ता न्मुनिः ॥ ३

अमुष्य जायापतिपादपाथसा,
मुदा तदुच्छिष्टसुदीर्दिवि च सा ।
प्रगृह्य तत्कल्पितदेहवर्त्तना,
दिनाऽन्यनेकानि सुखं नयत्यहो ! ॥ ४

विरिञ्चमानेन निवर्त्यते ह्यसौ,
ऋतु स्त्विह द्वादशबत्सरावधिः ।

मुनिश्च निश्चिन्त इहैव तिष्ठति,
स्थितिः प्रियायाः कथ मस्य भूतले ।। ५

तृणाग्रसंलग्नतुषारबिन्दुव,
च्चलं मनुष्या।यु रिदं सुनिश्चितम् ।
मनुष्यसंवत्सरकोटिकोटिभिः,
पितामहस्यैकदिनं प्रकीर्त्यते ।। ६

चिरायुरस्या विहितं कथन्विदं,
मनस्तु सन्देह मवाप्य सीदति ।
भवद्भि रेवात्र मदीयसंशयं,
व्यपोह्य मह्यं प्रतिवाक्य मुच्यताम् ।। ७

इदं मुने वैंणिकचक्रवर्तिनो,
निशम्यवाक्यं जगदु स्त्रिमूर्तयः ।
विरिञ्चलोका न्मुनि रिन्द्रमन्दिरं,
प्रपत्स्यते कर्तु मसौ हरे र्मखम् ।। ८

वयं तदा तत्र निधाय नः कला,
भुवं प्रपद्याशु सती मिमां मुनेः ।
परीक्षितुं पर्णकुटीर मादरा,
दवाप्नुवामापिहितात्मविग्रहाः ।। ९

इति स्थिता निश्चितबुद्धयो विधे,
र्मखान्तपर्यन्त मजेशकेशवाः,
तथा विधात्र्याश्रमवास हे विभो,
प्रसीद नः पाहि विपत्कदंबकात् ।। १०

# भिन्नदृष्टि र्हि लोकः

— आर्. गोपालन्, चित्तूरु.

अहो लोकरीतिर्विचित्रा वर्तते। कञ्चन नरं केचन निन्दन्ति। तमेव अन्ये पुनः प्रशंशन्ते। स तु निन्दाप्रशंशे अनादृत्य उदासीनभावं वहति। अप्ययं निन्दार्हः उत प्रशंशार्हः इति केन वा वक्तुं शक्यते। अपितु दोषान्वेषिणः दोषं, गुणान्वेषिणः गुणं च सर्वत्र पश्यन्ति इत्यत्र न कोऽपि संशयः।

शान्तमूर्तिः त्यागशीलः लोकहिते रतः सन्मार्गावलम्बी गांधीमहात्मापि लौकिकैः निन्दितः खलु। दुराचारशीलं दुर्मार्गावलम्बिनं पापात्मानमपि कति न प्रशंशन्ति? एषैव लोकरीतिः। तत्वान्वेषिणः कतिचन एव महान्तः रागद्वेषविहीना स्सन्तः वस्तुस्थितिं परिशीलयन्ति।

पञ्चाशत्संवत्सरेभ्यः पूर्वं द्राविडदेशे पञ्चनदनगरस्थसंस्कृतकलाशालायां दशवर्षप्रायः मलयप्प इति नामधेयः कश्चित् बालः प्रारंभकक्ष्यायां मया सह लब्धप्रवेशोऽभवत्। स बालः सरलस्वभावयुक्तः सर्वेषु बालकेषु, अभिस्निग्धश्च आसीत्। सः हास्येपि चतुरोऽभूत्। अतः हास्यास्वादनिरतैः बालैः स सर्वदा परिवेष्टितोऽभूत्। विद्यावगाहने च सः कुशाग्रबुद्धि राहीत्।

एकदा सहपाठी कश्चिद्विद्यार्थी तं बालं परिहासवचोभिः हेलन मकरोत्। हेलनं असहमानः मलयप्पः स्वमनोव्यथां अधोनिर्दिष्टश्लोकरूपेण आविष्कृतवान्।

"आसीदस्मिन् कलाशाले वाल्कुट्टी नाम भूसुरः ।
महाकोपी महापापी एकमीशा धुरंधरः ॥" इति ।

अश्मिन् श्लोके लिङ्गक्रियादोषपरिगणनं विसृज्य तस्य बालस्य कवनकौशलमेव सहृदयैः ग्राह्यम् ।

तस्य वदनात् पुष्पितं छन्दोबद्धं श्लोकं श्रुत्वा सर्वैरपि बालैः स अभिनन्दितोऽभूत् । तस्य विद्यार्थिनः ओष्ठोपरिभागे नाशिकायाश्च अधश्च श्मश्रुवत् किञ्चित् व्रणजनितचिह्नमभूत् । तत् "एकमीशा धुरंधरः" इति सूचितं भवति ।

एतत् श्लोकं श्रुत्वा प्रकुपितः स विद्यार्थी प्रधानाध्यापकाय न्यवेदयत् । प्रधानोपाध्यायः तं बालं आहूय बेत्रप्रहारेण भर्त्सितवान् । अनेन दण्डेन सहपाठी तुष्टोऽभवत् ।

तस्यां कलाशालायां नारायणशास्त्रीति नामाङ्कितः चतुश्शास्त्रवेत्ता आगर्भकविवरः कश्चित्पण्डितोत्तमः आसीत् । सः तं श्लोकं श्रुत्वा तं बालमाहूय गाढं आलिंग्य एवमवोचत् ।

तव कवनशक्तिः अतीव प्रशंशार्हा भवति । अचिरादेव त्वं महाकवि र्भविष्यसि" इति । कविसार्वभौमस्य आशीर्वचनेन सन्तुष्टः स बालः प्रहारजातव्यथां तदैव विस्मृतवान् ।

उन्नतकक्ष्यां अधिगते तस्मिन् विद्यार्थिसभाप्रधानकार्यदर्शीपदव्यै सः विद्यार्थिभिः वरितोऽभवत् । सभाकार्यदर्शीपदवीं अधिष्ठितः मलयप्पः निवेदिकापठनं वन्दनसमर्पणं इत्यादि समस्तमपि कार्यजालं श्लोकरूपेण चालयित्वा अचार्यैरपि बहुमानितोऽभवत् । विद्यार्थिसभाचरित्रे अस्य कार्यनिर्वहणरीतिः अविस्मरणीया अनन्यसाध्या चाऽभवत् ।

R. N. 1845/60. Postal C. T. R. 11.
भान्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

## प्रहेलिका

मातृशब्देन सम्बन्धो जकारस्य तु सम्भवेत् ।
तदा तत्पदावाच्यत्वं सुतानाथस्य उच्यते ॥

(जामाता)

– ति. गो. अनन्तसुब्रह्मण्यम्, तिरुपति.

Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate
& Secretary S. B. P Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge)
at Vijaya Press, Chittoor, (A. P.) C. 1500.